सीनमधस्था उपासीरन्नन्ये ब्राह्मणेभ्यस्तेऽप्येनं मन्येरन् वर्णा-
नाश्रमांश्च न्यायतोऽभिरक्षेच्चलतश्चैनान् स्वधर्मे स्थापयेद्धर्म-
स्थोह्यंशभाग्भवतीति विज्ञायते ब्राह्मणञ्च पुरोदधीत विद्या-
भिजनवाग्रूपवयः शीलसम्पन्नं न्यायवृत्तं तपस्विनं तत्प्रसूतः
कर्माणि कुर्वीत ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च
विज्ञायते यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत
तदधीनमपि ह्येके योगक्षेमं प्रतिजानते शान्तिपुण्याहस्वस्त्य-
यनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणां सम्बलनमभि-
चारद्विषद्व्याधिसंयुक्तानि च शालाग्नौ कुर्याद्यथोक्तमृत्विजो-
ऽन्यानि तस्य व्यवहारो वेदोधर्मशास्त्राण्यङ्गान्युपवेदाः पुराणं
देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणं कृषिवणिक्पाशु-
पाल्यकुसीदकारवः स्वे स्वे वर्गे तेभ्यो यथाधिकारमर्थान्
प्रत्यवहृत्य धर्मव्यवस्था न्यायाधिगमे तर्कोऽभ्युपायस्तेना-
भ्यूह्य यथास्थानं गमयेद्विप्रतिपत्तौ त्रयीविद्यावृद्धेभ्यः प्रत्यव-
हृत्यनिष्ठां गमयेदथाहास्य निःश्रेयसं भवति ब्रह्मक्षत्रेण
सम्प्रवृत्तं देवपितृमनुष्यान्न धारयतीति विज्ञायते दण्डोदमना-
दित्याहुस्तेनादान्तान् दमयेद्वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य
कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुत-
वृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वमो विपरीता
नश्यन्ति तानाचार्योपदेशोदण्डश्च पालयते तस्माद्राजाचार्या-
वनिन्द्यावनिन्द्यौ ।

इति गौतमीये धर्मशास्त्रे एकादशोऽध्यायः ।

## द्वादशोऽध्यायः।

### अथ विविधपापकरणे दण्डविधानवर्णनम्।

शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यादार्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणञ्च गोप्ता चेद्वधोऽधिकोऽथाहास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम्।
क्षत्रियो ब्राह्मणाक्रोशे दण्डपारुष्ये द्विगुणमध्यर्ध्वं वैश्यो ब्राह्मणक्षत्रिये पञ्चाशत्तदर्द्धं वैश्ये न शूद्रे किञ्चित् ब्राह्मणराजन्यवत् क्षत्रियवैश्यावष्टापाद्यं स्तेयकिल्विषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्ण विदुषोऽतिक्रमे दण्डभूयस्त्वं फलहरितधान्यशाकादाने पञ्चकृष्णलमल्पे पशुपीडिते स्वामिदोषः पालसंयुक्ते तु तस्मिन् पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः पञ्च माषा गवि षडुष्ट्रे खरोऽश्वमहिष्योर्दशाजाविषु द्वौ द्वौ सर्वविनाशे शतं शिष्टाकरणे प्रतिषिद्धसेवायाञ्च नित्यं चेलपिण्डादूर्ध्वं स्वहरणञ्च गोऽग्न्यर्थे तृणमेधान् वीरुध वनस्पतीनाञ्च पुष्पाणिस्ववदाददीत फलानि चापरिवृतानाम् कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषकी मासं नातिसांवत्सरीमेके चिरस्थाने द्वैगुण्यं प्रयोगस्य मुक्ताभिर्न वर्द्धते दित्सतोऽवरुद्धस्य च चक्रकालवृद्धिः कारिताकायिकाशिखाधिभोगाश्च कुसीदं पशूपजलोमक्षेत्रशतवाह्येषु नातिपञ्चगुणमजडापोगण्डधनं दशवर्षं

भुक्तं परैः सन्निधौ भोक्तुरश्रोत्रियप्रव्रजितराजन्यधर्मपुरुषः पशुभूमिस्त्रीणामनतिभोगश्चृक्थभाजि ऋणं प्रतिकुर्युः प्राति-भाव्यवणिक्शुल्क मद्य द्यूतदण्डान् पुत्रानध्याभवेयुर्निध्यं वाधियाचितावक्रीताधयोनष्टाः सर्वा न निन्दिता न पुरुषा-पराधेन स्तेनः प्रकीर्णकेशो मुषली राजानमियात् कर्माचक्षाणः पूतोबधमोक्षाभ्यामघ्नन्नेनस्वी राजा न शारीरो ब्राह्मणदण्डः कर्मवियोगविख्यापनाविवासनाङ्ककरणान्यप्रवृत्तौ प्रायश्चित्ती स चौरसमः सचिवोमतिपूर्वं प्रतिग्रहीताप्यधर्मसंयुक्ते पुरुष-शक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगोऽनुज्ञानं वा वेदवित् समवायवचनात् वेदवित्समवायवचनात्।

इति गौतमीये धर्मशास्त्रे द्वादशोऽध्यायः।

---

## त्रयोदशोऽध्यायः।

### अथ साक्षीणां विधावर्णनम्।

विप्रतिपत्तौ साक्षिणी मिथ्यासत्यव्यवस्था बहवः स्युरनि-न्दिताः स्वकर्मसु प्रात्ययिका राज्ञाश्च निष्प्रीत्यनभितापाश्चान्य-तरस्मिन्नपि शूद्राब्राह्मणवचनादनु रोध्योऽनिबन्धश्चेन्नासमवेता पृष्टाः प्रब्रूयुरवचने च दोषिणः स्युः स्वर्गः सत्यवचने विपर्यये नरकः। अनिबन्धैरपि वक्तव्यं पीडाकृते निबन्धः प्रमत्तोक्ते च साक्षिसभ्य राजकर्तृपु दोषोधर्मतन्त्रपीडायां शपथेनैके

सत्यकर्मणा तद्देवराजब्राह्मणसंसदि स्याद्ब्राह्मणानां क्षुद्रपशवनृते साक्षी दश हन्ति गोऽश्वपुरुषभूमिषु दशगुणोत्तरान् सर्वं वा भूमौ हरणे नरकोभूमिवदप्सु मैथुनसंयोगे च पशुवन्मधुसर्पिषोर्गोवद्वस्त्रहिरण्यधान्यब्रह्मसु यानेष्वश्ववन्मिथ्यावचने याप्यो दण्ड्यश्च साक्षी नानृतवचने दोषोजीवनञ्चेत्तदधीनं नतु पापीयसोजीवनं राजा प्राड्विवाकोब्राह्मणोवा शास्त्रवित् प्राड्विवाको मध्योभवेत् सम्वत्सरं प्रतीक्षेत प्रतिभायां धेन्वनडुहस्त्रीप्रजनसंयुक्तेषु शीघ्रमात्ययिके च सर्वधर्मेभ्योगरीयः प्राड्विवाके सत्यवचनं सत्यवचनम्।

इति गौतमीये धर्मशास्त्रे त्रयोदशोऽध्यायः।

---

## चतुर्दशोऽध्यायः।

### अथ अशौचवर्णनम्।

शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानामेकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्यार्द्धमासमेकं मासं शूद्रस्य तच्चेदन्तः पुनरापतेत्तच्छेषेण शुद्धेयरन् रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिर्गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्च युद्धे प्रायोनाशकशास्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतां पिण्ड निवृत्तिः सप्तमे पञ्चमे वा जननेऽप्येवं मातापित्रोस्तन्मातुर्वा गर्भमाससमा रात्रिः स्रंसने गर्भस्य त्र्यहं वा श्रुत्वा चोर्ध्वं

दशम्याः पक्षिण्यसपिण्डयोनिसम्बन्धे सहाध्यायिनि च सब्रह्मचारिण्येकाहं श्रोत्रिये चोपसम्पन्ने प्रेतोपस्पर्शने दशरात्र माशौचमभिसन्धाय चेदुक्तं वैश्यशूद्रयोरार्त्तवीर्वापूर्वयोश्च त्र्यहं वाचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवमवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत् पूर्वोवावरं तत्र शावोक्तमाशौचं पतित चण्डाल सूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शना-च्छुद्ध्येच्छवानुगमे च शुनश्च यदुपहन्यादित्येके उदकदानं सपिण्डैः कृतचूडस्य तत्स्त्रीणाञ्चानतिभोग एकेऽप्रदत्तानामधः शय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयेरन्न मांसं भक्षये-युराप्रदानात् प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया वासनाञ्च त्यागः अन्त्ये त्वन्त्यानां दन्तजन्मादि माता पितृभ्यां तूष्णीं माता बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यः शौचं राज्ञाञ्च कार्यविरोधाद्ब्राह्मणस्य च स्वाध्याया निवृत्त्यर्थं स्वाध्यायानिवृत्त्यर्थम्।

इति गौतमीये धर्मशास्त्रे चतुर्दशोऽध्यायः।

---

## पञ्चदशोऽध्यायः।

## अथ श्राद्धविवेकवर्णनम्।

अथ श्राद्धममावस्यायां पितृभ्योदद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मण-

सन्निधाने वा कालनियमः शक्तितः प्रकर्ष गुणसंस्कार-
विधिरन्नस्य नवावरान् भोजयेदयुजो यथोत्साहं वा
ब्राह्मणान् श्रोत्रियान् वाग्रूपवयःशीलसम्पन्नान् युवभ्योदानं
प्रथममेके पितृवन्नच तेन मित्रकर्म कुर्य्यात् पुत्राभावे
सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्वि-
गाचार्य्यौ तिलमाषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति
मत्स्यहरिणरुरुशशकूर्मवराहमेषमांसैः सम्वत्सराणि गव्य-
पयःपायसैर्द्वादश वर्षाणि वार्ध्रीणसेन मांसेन कालशाक-
च्छागलोहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम्।

न भोजयेत् स्तेनक्लीवपतितनास्तिकतद्वृत्तिवीरहाग्रेदीधिः
षुदीधिषुपतिस्त्रीग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकुचरकूटसाक्षि-
प्रातिहारिकानुपपत्तिर्यस्य च कुण्डाशी सोमविक्रय्यगार-
दाही गरदावकीर्णिगणप्रेष्यागम्यागामिहिंस परिवित्तपरि-
वेत्तृपर्य्याहितपर्य्या धातृत्यक्तात्मदुर्बलाः कुनखिश्यावदन्तः
श्वित्रिपौनर्भवकितवाज प्रेष्य प्रातिरूपकशूद्रापतिनिराकृति-
किलासी कुसीदी वणिक्शिल्पोपजीविज्यावादित्रताल-
नृत्यगीतशीलान् पित्रा चाकामेन विभक्तान् शिष्यांश्चैके
सगोत्रांश्च। भोजयेदूर्ध्वं त्रिभ्योगुणवन्तम्।

सद्यश्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयति पितॄंस्तस्मा-
त्तदहर्ब्रह्मचारी स्यात् श्वचण्डालपतितावेक्षणे दुष्टं तस्मा-
त्परिश्रुते दद्यात्तिलैर्वा किरेत् पङ्क्तिपावनोवा शमयेत्
पङ्क्तिपावनाः षडङ्गविज्ज्येष्ठसामिकस्त्रिणाचिकेतस्त्रिमधु-

स्त्रिसुपर्णः पञ्चाग्निः स्नातकोमन्त्रब्राह्मणविद्धर्मज्ञोब्रह्मदेया-
नुसंधान इति हविःषु चैवं दुर्बलादीन् श्राद्ध एवैके श्राद्ध एवैके ।

इति गौतमीये धर्मशास्त्रे पञ्चदशोऽध्यायः ।

---

## षोडशोऽध्यायः ।

### अथ अनध्यायवर्णनम् ।

श्रवणादि वार्षिकं प्रोष्ठपदीं वोपाकृत्याधीयीत च्छन्दां-
स्यर्द्ध पञ्चममासान् पञ्चदक्षिणायनं वा ब्रह्मचार्य्युत्सृष्ट-
लोमा न मांसं भुञ्जीत द्वैमास्योवा नियमो नाधीयीत वायौ
दिवापाशुहरे कर्णश्राविणि नक्तं वाणभेरीमृदङ्गगर्ज्जार्त्त-
शब्देषु च श्वशृगालगर्दभसंह्लादे लोहितेन्द्रधनुर्नीहारेष्वभ्र-
दर्शने चापत्तौ मूत्रित उच्चारिते निशासन्ध्योदकेषु वर्षति
चैके वल्मीकसन्तानमाचार्य्यपरिवेषणे ज्योतिषोश्च भीतो
यानस्थःशयानःप्रौढपादः श्मशानग्रामान्तमहापथाशौचेषु
पूतिगन्धान्तःशवदिवाकीर्त्तिशूद्रसन्निधाने सूतके चोद्गारे
ऋग्यजुषश्च सामशब्दो यावदाकालिका निर्घातभूमिकम्प-
राहुदर्शनोल्कास्तनयित्नुवर्षविद्युतः प्रादुष्कृताग्निष्वनृतौ
विद्युति नक्तञ्चापररात्रात्त्रिभागादिप्रवृत्तौ सर्वमुल्का
विद्युत्समत्येकेषां । स्तनयित्नुरपराह्णेऽपि प्रदोषे सर्वं

नक्तमर्द्धरात्रादहश्चेत् सज्योतिर्विषयस्थे च राज्ञि प्रेते विप्रोष्य चान्योन्येन सह सङ्कुलोपाहितवेदसमाप्तिच्छर्दि-श्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रममावास्यायाश्च द्व्यहं वा कार्त्तिकी फाल्गुन्याषाढी पौर्णमासी तिस्रोऽष्टकास्त्रिरात्र-मन्त्यामेके अभितो वार्षिकं सर्वे वर्षविद्युत्स्तनयित्नु-सन्निपाते प्रस्यन्दिन्यूर्द्ध्वं भोजनादुत्सवे प्राधीतस्य च निशायां चतुर्मुहूर्तं नित्यमेके नगरे मानसमप्यशुचि श्राद्धिनामाकालिकमकृतान्नश्राद्धिकसंयोगे च प्रतिविद्यश्च यावत् स्मरन्ति प्रतिविद्यश्च यावत् स्मरन्ति ॥

इति गौतमीये धर्मशास्त्रे षोडशोऽध्यायः।

---

## सप्तदशोऽध्यायः।

### अथ भक्ष्याभक्ष्यप्रकरणम्।

प्रशस्तानां स्वकर्म्मसु द्विजातीनां ब्राह्मणोभुञ्जीत प्रतिगृह्णीया-दैधोदकयवसमूलफलमध्वभयाभ्युद्यतशय्यासनयानपयो-दधिधानाशफरिप्रियङ्गुस्रङ्मार्गशाकान्यप्रणोद्यानि सर्वेषां पितृदेवगुरुभृत्यभरणे चान्यवृत्तिश्चेन्नान्तरेण शूद्रात् पशु पालक्षेत्रकर्षककुलसङ्गतकारपितृपरिचारका भोज्यान्ना वणिक् चाशिल्पी नित्यमभोज्यं केशकीटावपन्नं रजस्वलाकृष्णशकुनि-पदोपहतं भ्रूणघ्नप्रेक्षितं गवोपघ्रातं भावदुष्टं शुक्तं केवलमदधि

पुनः सिद्धं पर्युषितमशाकभक्ष्यस्नेहमांसमधून्युत्सृष्टपुंश्चल्यभि-
शस्तानपदेश्यदण्डिकतक्षकदर्यबन्धनिकचिकित्सकमृगयुवायुं-
च्छिष्टभोजिगणविद्विषाणामपाङ्क्त्यानां प्राग्दुर्बलाद्वृथान्ना-
चमनोत्थानव्यपेतानि समासमाभ्यां विषमसमेपूजान्तरा-
नर्चितञ्च गोश्च क्षीरमनिर्दशायाः सूतके चाजामहिष्योश्च
नित्यमाविकमपेयमौष्ट्रमैकशफञ्च स्यन्दिनीयमसूसन्धिनी-
नाञ्च याश्च व्यपेतवत्साः पञ्चनखाश्चाशल्यकशशश्वाविड्गो-
धाखड्गकच्छपा उभयतोदत्केशलोमैकशफकलविङ्कप्लवचक्रवाक-
हंसाः काककङ्कगृध्रश्येनाजलजारक्तपादतुण्डा ग्राम्यकुक्कुट
शूकरौ धेन्वनडुहौ चापन्नदावसन्नवृथामांसानि किसलय-
क्याकुलशुननिर्यासलोहितान्वश्चनाश्वनिचिदारुवकबलाक-
टिट्टिभमान्धातृनक्तञ्चरा अभक्ष्याः ।
भक्ष्याः प्रतुदाविष्किराजालपादामत्स्याश्चाविकृतावध्याश्च
धर्मार्थे व्यालहता दृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीतोप-
युञ्जीत ।

इति गौतमीये धर्मशास्त्रे सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः ।

### अथ स्त्रीषु ऋतुकाले सहवासप्रकरणम् ।

अस्वतन्त्रा धर्मे स्त्री नातिचरेद्भर्त्तारं वाक्चक्षुः कर्मसंयता
पतिरपत्यलिप्सुर्देवराद्गुरुप्रसूता नर्त्तुमतीयात् पिण्डगोत्र

ऋषिसम्बन्धिभ्योयोनिमात्राद्वा न देवरादित्येके नाति-
द्वितीयं जनयितुरपत्यं समयादन्यत्र जीवतश्च क्षेत्रे परस्मा-
त्तस्य द्वयोर्वा रक्षणाद्भर्त्तुरेवनष्टेभर्त्तरि षाड्वार्षिकं क्षपणं
श्रूयमाणेऽभिगमनं प्रव्रजिते तु निवृत्तिः प्रसङ्गात्तस्य द्वादश-
वर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि
यवीयान् कन्याग्न्युपयमेषु षड़ित्येके त्रीन् कुमार्य्यृतूनतीत्य
स्वयं युज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् प्रदानं
प्रागृतोरप्रयच्छन् दोषी प्रावाससः प्रतिपत्तेरित्येके प्रव्यादानं
विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रान्यत्रापि शूद्राद्बहु-
पशोर्हीनकर्मणः शतगोरनाहिताग्नेः सहस्रगोश्च सोमपात्
सप्तमीश्चाभुक्त्वा निचयायाप्यहीनकर्मभ्य आचक्षीत राज्ञा
पृष्टस्तेन हि भर्तव्यः श्रुतशीलसम्पन्नश्चेद्धर्मतन्त्रपीडायां
तस्याकरणे दोषादोषः॥

इति गौतमीये धर्मशास्त्रे अष्टादशोऽध्यायः।

---

## एकोनविंशोऽध्यायः।

अथ प्रतिषिद्धसेवने प्रायश्चित्तमीमांसावर्णनम्।

उक्तो वर्णधर्मश्चाश्रमधर्मश्चाथ खल्वयं पुरुषो येन कर्मणा
लिप्यतेऽथैतदयाज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्ट-

स्याक्रिया प्रतिषिद्धसेवनमिति च तत्र प्रायश्चित्तं कुर्य्यान्न कुर्य्यादिति मीमांसन्ते न कुर्य्यादित्याहुर्नहि कर्मक्षीयत इति कुर्य्यादित्यपरे पुनस्तोमेनेष्ट्वा पुनः सवनमायातीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्म-हत्यां योऽश्वमेधेन यजतेग्निष्टुताभिशस्यमानं याजयेदिति च । तस्य निष्क्रयणानि जपस्तपोहोम उपवासोदान-मुपनिषदो वेदान्ताः सर्वच्छन्दःसु संहिता मधून्यघमर्षण-मथर्वशिरोरुद्राः पुरुषसूक्तं राजनरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यं ज्येष्ठ-साम्नामन्यतमद्बहिष्यवमानं कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि ।

पयोव्रतता शाकभक्षता फलभक्षता प्रसृतयावको हिरण्यप्राशनं घृतप्राशनं सोमपानमितिं च मेध्यानि । सर्वे शिलोच्चयाः सर्वाः स्रवन्त्यः पुण्याह्रदास्तीर्थानि ऋषिनिवासगोष्ठपरिस्कन्दा इति देशाः ।
ब्रह्मचर्य्यं सत्यवचनं सवनेषूदकोपस्पर्शनमार्द्रवस्त्रताधः-शायितानाशक इति तपांसि ।

हिरण्यं गौर्वासोऽश्वोभूमिस्तिलाघृतमन्नमिति देयानि । सम्वत्सरः षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो-द्वादशाहः षडहस्त्र्यहोऽहोरात्र इति कालाः ।
एतान्येवानादेशे विकल्पेन क्रियेरन् ।

एनःसु गुरुषु गुरूणि लघुषु लघूनि कृच्छ्रातिकृच्छ्रं चान्द्रायणमिति सर्वप्रायश्चित्तं सर्वप्रायश्चित्तम् ॥

इनि गौतमीये धर्मशास्त्रे एकोनविंशोऽध्यायः।

---

## विंशतितमोऽध्यायः।

### अथ विविधपापानां कर्मविपाकवर्णनम्।

अथ चतुःषष्टिषु यातनास्थानेषु दुःखान्यनुभूय तत्रेमानि लक्षणानि भवन्ति ब्रह्महार्द्रकुष्ठी सुरापः श्यावदन्तगुरुतल्पगः पङ्गुः स्वर्णहारी कुनखी श्वित्री वस्त्रापहारी हिरण्यहारी दर्दूरी तेजोऽपहारी मण्डली स्नेहापहारी क्षयी तथा जीर्णवानन्नापहारी ज्ञानापहारी मूकः प्रतिहन्ता गुरोरपस्मारी गोघ्नो जात्यन्धः पिशुनः पूतिनासः पूतिवक्त्रस्तु सूचकः शूद्रोपाध्यायः श्वपाकस्त्रपुसीसचामरविक्रयी मद्यप एकशफविक्रयी मृगव्याध कुण्डाशी भृतकश्चैलिकोवा नक्षत्री चार्वुदी नास्तिकोरङ्गोपजीव्यभक्ष्यभक्षी गण्डरी ब्रह्मपुरुषतस्कराणां देशिकः पिण्डितः षण्डोमहापथिकोगण्डिकश्चण्डाली पुक्कसी गोष्कवकीर्णी मध्वामेही धर्मपत्नीषु स्यान्मैथुनप्रवर्तकः खल्वाटसगोत्रसमयस्त्र्यभिगामी पितृमातृभगिनीस्त्र्यभिगाम्यावीजितस्तेषां कुब्ज-

कुण्ठमण्डव्याधितव्यङ्गदरिद्राल्पायुषोऽल्पबुद्धयश्चण्डपण्डशैलू-षतस्करपरपुरुषप्रेष्यपरकर्मकराः खल्वाटचक्राङ्गसङ्कीर्णाः क्रूरकर्माणः क्रमशश्चान्त्याश्चोपपद्यन्ते तस्मात् कर्तव्यमेवेह प्रायश्चित्तं विशुद्धैर्लक्षणैर्जायन्ते धर्मस्य धारणादिति धर्मस्य धारणादिति ॥

इति गौतमीये धर्मशास्त्रे विंशतितमोऽध्यायः।

---

## एकविंशतितमोऽध्यायः।

## अथ सर्वपातकेषु शान्तिवर्णनम्

त्यजेत् पितरं राजघातकं शूद्रयाजकं वेदविप्लावकं भ्रूणहनं यश्चान्त्यावसायिभिः सह सम्वसेदन्त्यावसायिन्या वा तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्य्युः पात्रञ्चास्य विपर्य्यस्येयुः। दासः कर्मकरोवावकरादमेध्यपात्रमानीय दासी घटान् पूरयित्वा दक्षिणामुखः पदा विपर्य्यस्येदमुमनुदकं करोमीति नामग्राहस्तं सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसन्बन्धाश्च वीक्षेरन्नप उपस्पृश्य ग्रामं प्रविशन्ति। अत ऊर्द्ध्वं तेन सम्भाष्य तिष्ठेदेकरात्रं जपन् सावित्रीमज्ञानपूर्वं ज्ञानपूर्वञ्चेत्त्रिरात्रम्

यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिन् शुद्धे शातकुम्भमयं पात्रं पुण्यतमाद्ध्रदात् पूरयित्वा स्रवन्तीभ्यो वा त एनमप उपस्पर्शयेयुः। अथास्मै तत्पात्रं दद्युस्तत् सम्प्रतिगृह्य जपेच्छान्ता द्यौः शान्ता पृथिवी शान्तं शिवमन्तरीक्षं योरोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समन्दीभिः कुष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं ब्राह्मणाय वा दद्याद्गामाचार्य्याय। यस्य तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत्तस्य सर्वाण्युदकादीनि प्रेतकर्माणि कुर्य्युरेतदेव शान्त्युदकं सर्वेषूपपातकेषु सर्वेषूपपातकेषु॥

इति गौतमीये धर्मशास्त्रे एकविंशतितमोऽध्यायः।

---

## द्वाविंशतितमोऽध्यायः।

### अथ निषिद्धकर्मणां जन्मान्तरे विपाक वर्णनम्

ब्रह्महासुरापगुरुतल्पगभातृपितृयोनिसम्बन्धगस्तेननास्तिकनिन्दितकर्माभ्यासिपतितत्याज्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च तैश्चाब्दं समाचरन्। द्विजातिकर्मभ्योहानिः पतनं परत्र चासिद्धिस्तामेके नरकं त्रीणि प्रथमान्यनिर्देश्यानि मनुर्न स्त्रीष्वगुरुतल्पगः पततीत्येके भ्रूणहनि। हीनवर्णसेवायाञ्च स्त्री पतति कौटसाक्ष्यं राजगामिपशुनं

गुरोरनृताभिशंसनं महापातकसमानि अपांक्त्यानां प्राग्दुर्बलाद्गोहन्तृब्रह्मोज्झ्यतन्मन्द्रकृदवकीर्णिपतितसाविन्त्रीकेषूपपातकं याजनाध्यापनादृत्विगाचार्य्यौ पतनीयसेवायाञ्च हेयावन्यत्र हानात् पतति तस्य च प्रतिग्रहीतेत्येके न कर्हिचिन्मातापित्रोरवृत्तिर्दायन्तु न भजेरन् ब्राह्मणाभिशंसने दोषस्तावान् द्विरनेनसि दुर्वलहिंसायामपि मोचने शक्तश्चेत्। अभिक्रुद्ध्यावगोरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यं निर्घाते सहस्रलोहितदर्शने यावतस्तत्प्रस्कन्द्य पांशून् संगृह्णीयात् संगृह्णीयात् ॥

इती गौतमीये धर्मशास्त्रे द्वाविंशतितमोऽध्यायः।

---

त्रयोविंशतितमोध्यायः।

अथ प्रायश्चित्तवर्णनम्।

प्रायश्चित्तमग्नौ सक्तिब्रह्मध्नस्त्रिरवच्छादितस्य लक्ष्यं वा स्याज्जन्येशस्त्रभृताम्।

खट्वाङ्गकपालपाणिर्वा द्वादशसम्वत्सरान् ब्रह्मचारी भैक्षाय ग्रामं प्रविशेत् स्वकर्माचक्षाणः पथोपक्रामेत् संदर्शनादार्यस्य स्नानासनाभ्यां विहरन् सवनेषूदकोपस्पर्शी शुद्धेयत् प्राणलाभे वा तन्निमित्ते ब्राह्मणस्य द्रव्यापचये वा त्र्यवरं प्रति राज्ञो-

ऽश्वमेधावभृथे वान्ययज्ञेऽप्यग्निष्टदन्तश्चोत्सृष्टश्चेद्ब्राह्मणबधे।

हत्वापि आत्रेय्याश्चैवं गर्भे चाविज्ञाते वा।

ब्राह्मणस्य राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्यं ऋषभैकसहस्राश्च गा दद्यात्।

वैश्ये त्रैवार्षिकं ऋषभैकशताश्च गा दद्यात्।

शूद्रे सम्बत्सरं ऋषभैकदशाश्च गा दद्यादनात्रेय्याश्चैवं गाश्च।

वैश्यवन्मण्डूकनकुलकाकविवदहरमूषिव श्च।

हिंसासु चास्थिमतां सहस्रं हत्वानस्थिमता मनडुद्भारे च।

अपि वास्थिमतामेकैकस्मिन् किञ्चित् किञ्चिद्दद्यात्।

षण्डे च पलालभारः सीसमाषश्च वराहे घृतघटः सर्पे लौहदण्डो ब्रह्मबन्ध्वाञ्चललनायां जीवोवैशिके न किञ्चित्तल्पान्नधनलाभबधेषु पृथग्वर्षाणि द्वे परदारे त्रीणि श्रोत्रियस्य द्रव्यलाभे चोत्सर्गो यथास्थानं वा गमयेत् प्रतिसिद्धमन्त्र संयोगे सहस्रवाक्चेदग्न्युत्सादिनिराकृत्युपपातकेषु चैवं स्त्री चातिचारिणी गुप्ता पिण्डं तु लभेत अमानुषीषु गोवर्जं स्त्रीकृते कूष्माण्डैर्घृतहोमो घृतहोमः।

इति गौतमीये धर्मशास्त्रे त्रयोविंशतितमोऽध्यायः।

---

## चतुर्विंशतितमोऽध्यायः।

### अथ प्रायश्चित्तवर्णनम्।

सुरापस्यब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुद्ध्येथ दमत्या पाने पयोघृतमुदकं वायुं प्रति त्र्यहं तप्तानि सकृच्छ्रस्ततोऽस्य संस्कारः।

मूत्रपुरीषरेतसाञ्च प्राशने श्वापदोष्ट्रखराणाञ्चाङ्गस्य ग्राम्यकुक्कुटशूकरयोश्च गन्धाघ्राणे सुरापस्य प्राणायामो घृतप्राशनञ्च पूर्वश्च दष्टस्य।

तल्पे लोहशयने गुरुतल्पगः शयीत सूर्मीं वा ज्वलन्तीं श्लिष्येल्लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममाशरीर निपातान्मृतः शुद्ध्येत।

सखीसयोनिसगोत्राशिष्यभार्यासु स्नुषायां गवि च तल्पसमोऽवकरइत्येके श्वभिरादयेद्राजा हीनवर्णगमने स्त्रियं प्रकाशं पुमांसं खादयेद्यथोक्तं वा गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजते तस्याजिनमूर्ध्वबालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षञ्चरेत् कर्माचक्षाणः सम्वत्सरेण शुद्ध्येत्।

रेतस्कन्दने भये रोगे स्वप्तेऽग्नीन्धनभैक्षचरणानि सप्तरात्रं कृत्वाज्यहोमः साभिसन्धेर्वा रेतस्याभ्यां सूर्याभ्युदिते ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमिते च रात्रिं जपन् सावित्रीमशुचिं दृष्ट्वादित्यमीक्षेत प्राणायामं कृत्वाऽभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावस्त्रिरात्रावरमभोजनं

सप्तरात्रं वा स्वयं शीर्णान्युपयुञ्जानः फलान्यनतिक्रामन् प्राक्पञ्चनखेभ्यश्छर्दिनोघृतप्राशनञ्चाक्रोशानृतहिंसासु त्रिरात्रं परमन्तपः सत्यवाक्ये चेद्वारुणीपावमानीभिर्होमोविवाह मैथुननिर्मातृसंयोगेष्वदोषमेकेऽनृतं नतु खलु गुर्वर्थेषु यतः सप्त पुरुषानितश्च परतश्च हन्ति मनसापि गुरोरनृतं वदन्नल्पेष्वप्यर्थेष्वन्त्यावसायिनीगमने कृच्छ्राब्दोऽमत्या द्वादशरात्रमुदक्यागमने त्रिरात्रं त्रिरात्रम्।

इति गौतमीये धर्मशास्त्रे चतुर्विंशतितमोऽध्यायः।

---

## पञ्चविंशतितमोऽध्यायः।

### अथ रहस्य प्रायाश्चित्तवर्णनम्।

रहस्यं प्राश्चित्तमविख्यातदोषस्य चतुर्ऋचं तरत्समन्दीत्यप्सु जपेदप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वाऽभोज्यं बुभुक्षमाणः पृथिवीमावपेदृत्यन्तरारमण उदकोपस्पर्शनाच्छुद्धिमेके स्त्रीषु पयोव्रतो वा दशरात्रं घृतेन द्वितीयमद्भिस्तृतीयं दिवादिष्वेक-भक्तकोजलक्लिन्नवासा लोमानि नखानि त्वचं मांसं शोणितं स्नाय्वस्थिमज्ज्ञानमितिहोम आप्मनोमुखे मृत्योरास्ये जुहो-मीत्यन्ततः।

सर्वेषामेतत् प्रायश्चित्तं भ्रूणहत्यायाः।

अथान्य उक्तोनियमोऽग्ने त्वं पारयेति महाव्याहृतिभिर्जुहुयात् कूष्माण्डैश्चाज्यं तद्व्रत एव वा ब्रह्महत्यासुरापानस्तेयगुरुतल्पेषु प्राणायामैः स्नातोऽघमर्षणं जपेत् सममश्वमेधावभृथेन सावित्रीं वा सहस्रकृत्व आवर्त्तयन् पुनीतेहैवात्मानमन्तर्जले वाघमर्षणं त्रिरावर्त्तयन् पापेभ्यो मुच्यते मुच्यते।

इति गौतमीये धर्मशास्त्रे पञ्चविंशतितमोऽध्यायः।

---

## षड्विंशतितमोऽध्यायः।

### अथ प्रायश्चित्तवर्णनम्।

तदाहुः कतिधावकीर्णी प्रविशतीति मरुतः प्राणेनेन्द्रं बलेन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेणेति सोऽमावास्यायां निश्यग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिदुग्धोस्म्यभिदुग्धोऽस्मि कामकामाय स्वाहेति समिधमाधायानु पर्युक्ष्य यज्ञवास्तु कृत्वोपस्थाय सम्मासिञ्चत्वित्येतया त्रिरुप तिष्ठेत त्रय इमे लोका एषां लोकानामभिजित्या अभिक्रान्त्या इत्येतदेवैकेषां कर्माधिकृत्ययोः पूतइव स्यात् सइत्थं जुहुयादित्थमनुमन्त्रयेद्वरोदक्षिणेति।

प्रायश्चित्तमविशेषादनार्जवपैशुनप्रतिषिद्धाचारानाद्यप्राशनेषु। शूद्रायाञ्च रेतः सिक्त्वा योनौ च दोषवति कर्मण्यभिसन्धि

पूर्वैष्वलिङ्गाभिरप उपस्पृशेद्वारुणीभि रन्यैर्वापवित्रैः प्रतिषिद्ध-
वाङ्मनसयोरपचारे व्याहृतयः संख्याताः पञ्च सर्वास्वपो
वाचा मे देहश्च मादित्यश्च पुनातु स्वाहेति प्रातः रात्रिश्च मा
वरुणश्च पुनात्विति सायमष्टौ वा समिधमादध्याद्देवकृतस्येति
हुत्वैवं सर्वस्मादेनसोमुच्यते मुच्यते।

इति गौतमीये धर्मशास्त्रे षड्विंशतितमोऽध्यायः।

---

## सप्तविंशतितमोऽध्यायः।

### अथ कृच्छ्रव्रतविधिवर्णनम्।

अथातः कृच्छ्रान् व्याख्यास्यामो हविष्यान् प्रातराशान् भुक्त्वा
तिस्रोरात्रीर्नाश्नीयादथापरं त्र्यहं नक्तं भुञ्जीत अथापरं त्र्यहं
न कञ्चन याचेदथापरं त्र्यहमुपवसेत्तिष्ठेदहनि रात्रावासीत
क्षिप्रकामः सत्यं वदेदनार्यैर्न सम्भाषेत रौरवयौधाजिने नित्यं
प्रयुञ्जीतानुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्र
वतीभिर्मार्जयेत् हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः।

अथोदकतर्पणं ॐनमोहमाय मोहम्नाय संहमाय धुन्वते ताप
साय पुनर्वसवे नमोनमोमौञ्ज्यायोर्म्याय वसुविन्दाय सर्व
विन्दाय नमोनमः पाराय सुपाराय महापाराय पारयिष्णवे
नमोनमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचराधि
पतये हरायशर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने

नमोनमः सूर्यायादित्याय नमोनमोनीलग्रीवाय शितिकण्ठाय नमोनमः कृष्णाय पिङ्गलाय नमोनमोज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्ध्वरेतसे नमोनमः सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमोनमो दीप्ताय दीप्तरूपिणे नमोनमस्तीक्ष्ण रूपिणे नमोनमः सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नमश्चन्द्रललाटाय कृत्तिवाससे पिनाकहस्ताय नमोनम इति । एतदेवादित्योपस्थानमेता एवाज्याहुतयो द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो देवताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे प्रजापतते अग्नये स्विष्टिकृत इति ।

ततो ब्राह्मणतर्पणम् ।

एतेनैवातिकृच्छ्रोव्याख्यातोयावत् सकृदाददीत तावदश्नीयादब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ।

प्रथमं चरित्वा शुचिः पूतः कर्मण्योभवति द्वितीयं चरित्वा यत्किञ्चिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते तृतीयं चरित्वा सर्वस्मादेनसोमुच्यते अथैतांस्त्रीन् कृच्छ्रान् चरित्वा सर्वेषु वेदेषु स्नातो भवति सर्वैर्देवैर्ज्ञातो भवति यश्चैवं वेद यश्चैवं वेद ।

इति गौतमीये धर्मशास्त्रे सप्तविंशतितमोऽध्यायः ।

---

## अष्टाविंशतितमोऽध्यायः ।

### अथ चान्द्रायणव्रतविधिवर्णनम् ।

अथातश्चान्द्रायणं तस्योक्तो विधिः कृच्छ्रे वपनं व्रतश्चरेत् श्वोभूतां पौर्णमासीमुपवसेदाप्यायस्व सन्ते पयांसि नवोनव इति चैताभिस्तर्पणमाज्यहोमोहविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसोयद्देवा देवहेलनमिति चतसृभिराज्यं जुहुयाद्देव कृतस्येति चान्ते समिद्भिरों भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूपं गिरौजस्तेजः पुरुषोधर्मः शिवः शिव इत्येतैर्ग्रासानुमन्त्रणं प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्वग्रासप्रमाणमास्याविकारेण चरुभैक्षसक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेन परपक्षमश्नीयादमावास्यायामुपोष्यैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम् ।

एष चान्द्रायणोमासोमासमेतमाप्त्वा विपापो विपाप्मा सर्वमेनोहन्ति द्वितीयमाप्त्वा दशपूर्वान् दशावरानात्मानञ्चैकविंशं पङ्क्तीश्च पुनाति सम्वत्सरं चाप्त्वा चन्द्रमसः सलोकतामाप्नोति ।

इति गौतमीये धर्मशास्त्रेऽष्टाविंशतितमोऽध्यायः ।

...⊂⊃...

## एकोनत्रिंशत्तमोऽध्यायः।

### अथ पुत्राणां सम्पत्तिविभागवर्णनम्।

ऊर्ध्वं पितुः पुत्रा ऋक्थं भजेरन्निवृत्ते रजसि मातुर्जीवति चेच्छति सर्वं वा पूर्वजस्येतरान् बिभृयात्।

पूर्ववद्विभागे तु धर्मवृद्धि विंशतिभागो ज्येष्ठस्य मिथुनमुभयतो दद्युक्तो रथोगोवृषः काणखोरकूटवण्डामध्वमस्यानेकश्चेद् विर्धान्यायसी गृहमनोयुक्तं चतुष्पदाञ्चैकैकं यवीयसः समञ्चेतरत् सर्वं द्वंथशी वा पूर्वजः स्यादेकैकमितरेषामेककं वा धनरूपं काम्यं पूर्वः पूर्वो लभेत दशतः पशूनां नैकशफः नैकशफानां वृषभोऽधिकोज्येष्ठस्य वृषभषोडशा ज्यैष्ठिनेयस्य समं वा ज्यैष्ठिनेयेन यवीयसां प्रतिमातृ वा स्ववर्गे भाग विशेषः।

पितोत्सृजेत् पुत्रिका मनपत्योऽग्निं प्रजापतिञ्चेष्ट्वास्मदर्थम पत्यमिति संवाद्याभिसन्धिमात्रात् पुत्रिकेत्येकेषां तत्संशयान्नो-पयेच्छेदभ्रातृकाम्।

पिण्डगोत्रऋषिसम्बन्धा ऋक्थं भजेरन् स्त्रीचानपत्यस्य बीजं वा लिप्सेत देवरवत्यन्यतोजातमभागम्।

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च भगिनीशुल्कं सोदर्याणामर्ध्वं मातुः पूर्वञ्चैके।

संसृष्टविभागः प्रेतानां ज्येष्ठस्य संसृष्टिनि प्रेते असंसृष्टी ऋक्थभाक् विभक्तजः पित्र्यमेव।

स्वयमर्जितं वैद्योऽवैद्येभ्यः कामं भजेरन्।

पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा ऋक्थभाजः कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयन्दत्तक्रीता गोत्रभाजश्चतुर्थांशभागिनश्चौरसाद्यभावे ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठोगुणसम्पन्नस्तुल्यांशभाक् ज्येष्ठांशहीनमन्यत् राजन्या वैश्यापुत्रसमवाये स यथा ब्राह्मणीपुत्रेण क्षत्रियाच्चेत् शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासविधिना सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषां श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थं भजेरन् राजेतरेषां जडक्लीवौ भर्त्तव्यावपत्यं जडस्य भागार्हं शूद्रापुत्रवत् प्रतिलोमासूदकयोगक्षेमकृतान्नेष्वविभागः स्त्रीषु च संयुक्तास्वनाज्ञाते दशावरैः शिष्टैरूहवद्भिरलुब्धैः प्रशस्तं कार्यम्।

चत्वारश्चतुर्णां पारगा वेदानां प्रागुत्तमा त्रय आश्रमिणः पृथग्धर्मविदस्त्रय एतान् दशावरान् परिषदित्याचक्षते असम्भवे त्वेतेषामश्रोत्रियो वेदविच्छिष्टोविप्रतिपत्तौ यदाह यतोऽयमप्रभवोभूतानां हिंसानुग्रहयोगेषु धर्मिणां विशेषेण स्वर्गं लोकं धर्मविदाप्नोति ज्ञानाभिनिवेशाभ्यामिति धर्मो धर्मः।

इति गौतमीये धर्मशास्त्रे एकोनत्रिंशत्तमोऽध्यायः।

समाप्ता चेयं गौतमस्मृतिः।

—:❀:❀:❀:—

अथ

# *॥ वृद्धगौतमस्मृतिः ॥*

.....०००.....

॥ श्रीगणेशायनमः ॥

.........

## प्रथमोऽध्यायः ।

अथ केशव युधिष्ठिर सम्वादवर्णनम् ।

अश्वमेधे पुरावृत्ते केशवं केशिसूदनम् ।
धर्मसंशयकं दृष्ट्वा किमपृच्छत गौतमः ॥१

गौतम उवाच ।

पञ्चमेनापि मेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजा नमस्कृत्य केशवं वाक्यमब्रवीत् ॥२

युधिष्ठिर उवाच ।

भगवन् ! वैष्णवा धर्माः किं फलं किं परायणाः ।
किं धर्ममधिकृत्यासीत् भवतोत्पादिता पुरा ।
यदि ते न मनो ग्राह्यः प्रियो वा मधुसूदन ! ॥३

श्रोतव्यः स तु वा कृष्ण ! तन्मे कथय सुव्रत !।
पवित्राः किल ते धर्माः सर्वपापप्रणाशनाः ॥४
सर्वधर्मोत्तराः पुण्या भगवन्ननघोत्थिताः।
यछ्रुत्वा ब्रह्मणा गोघ्नो मन्त्रिणा गुरुतल्पगः ॥५
पाकभेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी।
मित्रविश्वासघाती च ब्रह्मणा विष्णुना तथा ॥६
आत्मविक्रयिणो ये च जीवेयुश्च कुकर्मभिः।
पापाः शठा नैष्कृतिका व्यभिचारपरास्तथा ॥७
रसभेदकरा ये च ये च नीरप्रदूषकाः ॥८
श्रीर्विप्रेण कराश्चौरा विप्रा ये च पुरोहिताः।
रूक्षपणारुणाः स्निग्धा स्तथा ये परदारकाः ॥६
ये ते चान्ये च बहवः पश्च ते तेऽपि किल्बिषात्।
तानाचक्ष्व सुरश्रेष्ठ ! त्वद्भक्तोऽस्म्यहमच्युत ! ॥१०

वैशम्पायन उवाच।

इत्येवङ्कथितो देवो धर्मपुत्रेण संसदि।
वशिष्ठाद्यास्तपोयुक्ता मुनय स्तत्वदर्शिनः ॥११
श्रोतुकामाः परं गुण्यं भक्तिमन्तोहरेः कथाः।
तथा भागवताश्चैव ततस्तं पयवारयन् ॥१२

युधिष्ठिर उवाच।

यदि जानासि मां भक्तं स्निग्धम्वा भक्तवत्सल !।
सवधर्माणि गुह्याणि श्रोतुमिच्छामि तत्त्वतः ॥१३

धर्मान् कथय देवेश ! यद्यनुग्रहभागहम् ।
श्रुता मे मानवा धर्मा वाशिष्ठाः काश्यपास्तथा ॥१४
गार्ग्या गौतमीयाश्च तथागोपालितस्य च ।
पराशरकृताः पूर्वमात्रेयस्य च धर्मतः ॥१५
उमामहेश्वराश्चैव नन्दिधर्माश्च पावनाः ।
ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ॥१६
धूम्रवर्णाः कृताधर्माः क्रौञ्चवैश्वानरा अपि ।
भार्गव्या याज्ञवल्क्याश्च माण्डव्या कौशिकास्तथा ॥१७
भारद्वाजकृता ये च ब्रह्मस्वकुक्षताश्च ये ।
कृणिने च कृणीबाहो ! विश्वामित्रकृताश्च ये ॥१८
सुमन्तुजैमिनिकृताः शाकनेयास्तथैव च ।
पुलस्त्यपुलहोद्गीताः पाराशर्यास्तथैव च ॥१९
अगस्त्यगीता मौद्गल्याः शाण्डिल्यास्तुलहायनाः ।
बालखिल्यकृता ये च सप्तर्षिरचिताश्च ये ॥२०
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।
प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ॥२१
वैश्वानराख्या गीताश्च विभाण्डककृताश्च ये ।
नारदीयकृता धर्माः कापोताश्च श्रुता मया ॥२२
तथापि पुरवाक्यानि भृगोरङ्गिरसस्तथा ।
क्रौञ्चमातङ्गगीताश्च सौधहारीतकास्तथा ॥२३
पिङ्गवर्मकृताकान्ता ये च वा वसुपालिताः ।
उद्दालककृताधर्मा औशनसा स्तथैव हि ॥२४

वैश्यगा धनगीताश्च ये चान्येऽप्येव मागधाः ।
एतेभ्यः सर्वधर्मेभ्यो देवत्वाद्याश्च निश्रिताः ॥२५
पावनत्वात्पवित्रत्वाद्विशिष्टा इतिमे मतिः ।
तस्माच्छ्रुत्वा प्रपन्नस्य त्वदूभिन्नस्य च माधव ! ॥२६
युष्मदीयान् परान् धर्मान् पुण्यान् कथय मेऽच्युत !

वैशम्पायन उवाच ।

एवमुक्तस्तु धर्मज्ञो धर्मपुत्रेण माधवः ॥२७
उवाच धर्मान् सूक्ष्माख्यान् धर्मपुत्रस्य धीमतः ।

श्रीभगवानुवाच ।

यावन्तो यस्य कौन्तेय ! एतद्धर्मेषु सुव्रत ! ।
त्वत्समो मत्समो लोके न कश्चिदिह विद्यते ॥२८
धर्मः श्रुतो वा दृष्टो वा कृतो वा कथितोऽपि वा ।
आमोदितो वा राजेन्द्र ! पुनाति ह नरं सदा ॥२९
धर्मः पिता च माता च धर्मश्च सुहृदस्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परन्तपः ॥३०
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च ।
धर्मादैश्वर्यमेवञ्च धर्मः स्वर्गगतिः प्रभो ! ॥३१
धर्मो वशे विपन्नञ्च त्रायते महतो भयात् ।
द्विजत्वं देवतात्वञ्च धर्मः प्रापयते नरम् ॥३२
यदा च क्रियते पापः कालेन पुरुषस्य च ।
तदा सञ्जायते बुद्धिर्धर्मं कर्तुं युधिष्ठिर ! ॥३३

जन्मान्तरसहस्रैस्तु मानुषत्वं सुखी भव।
तत्तवापीह यो धर्मान् न करोति स वञ्चितः ॥३४
कीटाश्चैव पुरीषस्य विरूपा व्याधितास्तथा।
परद्वेष्याश्च मूर्खाश्च न तैः धर्माः कृताः पुरा ॥३५
एके दीर्घायुषः शूराः पण्डिता भोगिनस्तथा।
अरोगा रूपसम्पन्ना स्तैर्धर्माः स्युः कृताः पुरा ॥३६
एवं धर्मः कृतः सद्यो नयते गतिमुत्तमाम्।
अधर्मः सेव्यमानस्तु तिर्यग्योनिं नयत्यसौ ॥३७
इदं रहस्यं कौन्तेय! श्रूयतामिदमुत्तमम्।
कथयिष्येपरं गुण्यं मम भक्तस्य पाण्डव! ॥३८
इष्टस्त्वमसि मे त्यक्तुं प्रपन्नाश्चापि मां सदा।
परमात्ममपि ब्रूयां किं पुनर्धर्मसंहिताम् ॥३९
इदं मे मानुषं जन्म कृतमात्मनि मायया।
धर्मसंस्थापनायैव दुष्टानां शासनाय च ॥४०
मानुष्यं भावमापन्नं ये मां गृह्यं तवाज्ञया।
संसरन्ति ह ते मूर्खा स्तिर्यग्योनिष्वनेकशः ॥४१
ये च मां सर्वरक्तत्वे पश्यन्ति ज्ञानचक्षुषा।
मद्भक्तांस्तान् सदा युक्तान् मत्समीपं नयाम्यहम् ॥४२
मद्भक्तानान्तु मानुष्ये सर्वजन्म च पाण्डव!।
अपि वा ये अभिरता मद्भक्ताः पाण्डुनन्दन! ॥४३
मुच्यते पातकैः सर्वैः पद्मपात्रमिवाम्भसा।
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ॥४४

मद्भक्तिः क्रियते तात ! मनुष्याणां न संशयः।
यच्च रूप्यपरं पुण्यं तैस्तदचलवत् ध्रुवम् ॥४५
न दृश्यते तथा देवैर्मद्भक्तैः क्रुश्यते यथा।
जपरं यच्च मे रूपं प्राणभावेषु नाश्यते ॥४६
तदद्य ते ह सर्वार्थैः सर्वभूतैश्च पाण्डव !।
कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ॥४७
दर्शयामीति यद्रूपं तत्प्रपश्यन्ति मे सुराः।
स्थित्युत्पत्तिलयकर्त्तारं यो मां ज्ञात्वा प्रपद्यते ॥४८
अनुगृह्णाम्यहं तस्य संसारान्मोचयामि च।
अहमादीति भूतानां सृष्टा ब्रह्मादयोमया ॥४६
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम्।
ततो मूलोऽहमव्यक्तो रजोमध्ये प्रतिष्ठितम् ॥५०
ऊर्ध्वं सत्त्वविशालोऽहं ब्रह्मादि स्तम्बसंस्थितम्।
मूर्धानं मे दिवं विद्धि चन्द्रादित्यौ च लोचने ॥५१
देवादिब्राह्मणा वक्त्रं मरुतः श्वसनश्च मे।
दिशो मे बाहवश्चाष्टौ नक्षत्राणि विभूषणम् ॥५२
अन्तरिक्षकरं विद्धि सर्वभूतावकाशकम्।
मार्गो मेघानिलाभ्यान्तु यमं सोदरमव्ययम् ॥५३
पृथिवीञ्च वलं यद्वै द्वीपार्णा च नगैर्युतम्।
सर्वसन्धारणोपेतं पादौ मम युधिष्ठिर ! ॥५४
स्थितोह्येकगुणाख्ये ह द्विगुणश्चास्मि मारुते।
अगुणस्तैः स्थितोऽहं वै सलिले तु चतुर्गुणः ॥५५

महान्तो मे गुणाः पञ्च महाभूतेषु पञ्चसु ।
तन्मात्रेसंस्थितः सोऽहं पृथिव्यां पञ्चधा स्मृतः ॥५६

अहं सहस्रशीर्षस्तु सहस्रचरणेक्षणः ।
सहस्रबाहूदरदृक् सहस्राक्षः सहस्रपात् ॥५७

स्थितोऽस्मि सर्वतः सद्यो ह्यद्य तिष्ठेद्दशाङ्गुलम् ।
सर्वभूतात्मभूतः सन् सर्वव्यापी ततो ह्यहम् ॥५८

अचिन्त्योऽहमनन्तोऽहमचलोऽहमजो ह्यहम् ।
अनाद्योहमप्रमेयोऽहमव्ययोवेद्योऽहमयम् ॥५६

निर्गुणोऽहन्निर्गन्धात्मा नित्योऽहं निर्ममोऽपि च ।
निर्द्वन्द्वो निर्विकारोऽहं निधानञ्चामृतस्य च ॥६०

मृतस्य तस्य चाहञ्च स्वाहाकारो नराधिप ! ।
तेजसा तपसा चाहं भूतग्रामेष्वनव्ययः ॥६१

स्नेहपाशगणैर्बध्वा धारयाम्यात्ममायया ।
चतुराश्रमवर्णोऽहं चातुर्होत्रफलाशनः ।
चतुर्मूर्तिश्चतुर्व्यूह श्चतुराश्रमभाजनम् ॥६२

संहृत्याहं जगत्सर्वं कृत्वाहं गर्भमात्मनः ।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ! ॥६३

सहस्रयुगपर्यन्ता ब्राह्मी रात्रि र्महार्णवे ।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च ॥६४

कल्पे कल्पे च भूतानि संहरामि सृजामि च ।
न च मां तानि जानन्ति मायया मोहितानि हि ॥६५

मम चैवान्धकारस्य माश्रितव्यस्य नित्यशः।
प्रशान्तस्येव दीपस्य गतिर्नैवोपलभ्यते ॥६६

न तदस्ति क्वचिद्राजन् यत्र नाहं प्रतिष्ठितः।
न च तद्विद्यते भूतं मयि यन्नं [सर्वं] प्रतिष्ठितम् ॥६७

यावन्मात्रं शरीरं हि स्थूलसूक्ष्ममिदं क्वचित्।
जीवभूतो ह्यहं तस्मिन् हिताय मां प्रतिष्ठितः ॥६८

किञ्चात्र बहुनोक्तेन सत्यमेतत् ब्रवीमि ते।
यद्भूतं यत् भविष्यच्च तत्सर्वं मह्येव तु ॥६९

मया श्रद्दधनानि यानि भूतानि कानि पाण्डव !।
ममैव न च जानन्ति मायया मोहितानि मे ॥७०

एवं सर्वं जगदिदं सदेवासुरमानुषम्।
मन्त्रः प्रभवते राजन् मम विप्र ! विनाशिनः ॥७१

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे प्रथमोऽध्यायः।

---

द्वितीयोऽध्यायः।

अथ धर्मशास्त्र ( धर्म ) प्रशंसावर्णनम्।

वैशम्पायन उवाच।

एवमात्मोद्भवद्रव्य मगदद्दृश्यकेशवम्।
धर्मान्धर्मात्मजस्यैव पुण्यानकथयद् बहून् ॥१

श्रीभगवानुवाच ।

शृणु पाण्डव ! यत्नेन पवित्रं पावनं परम् ।
कथ्यमानं मया पुण्यं धर्मशास्त्रं महाफलम् ॥२
यच्छृणोति शुचिर्भूत्वा एकचित्तस्तपोधनः ।
धर्म्यं यशस्य मायुष्यं धर्मात्मानं युधिष्ठिर ! ॥३
श्रद्दधानस्य तस्येह यत्पाप्मा पूर्वसञ्चितः ।
विनश्यत्याशु तत्सर्वमभक्तस्य विशेषतः ॥४
एवं श्रुत्वा वचः पुण्यं वाक्यं केशवभागिनम् ।
प्रणष्टमनसो भूत्वा चिन्तयन्त्युत्तमं परम् ॥५
देवा ब्रह्मर्षयः सर्वे गन्धर्वाप्सरसस्तथा ।
भूताश्चयक्षग्रहा गुह्यका भुजगास्तथा ॥६
बालखिल्या महात्मानो योगिनस्तत्त्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥७
कौतुहलसमाविष्टाः प्रणष्टाः परमर्षयः ।
श्रोतुकामः परं गुह्यं वैष्णवं धर्मशासनम् ॥८
हृदि कर्तुंश्च तद्वाक्यं प्रणम्य शिशुना तदा ।
ततस्ते वासुदेवेन दृष्टाः सौम्येन चक्षुषा ॥९
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ।
पप्रच्छ केशवं धर्मं धर्मपुत्रः प्रतापवान् ॥१०

युधिष्ठिर उवाच ।

ततस्ते वासुदेवेन दृष्टाः सौम्येन मानुषाः ।
कीदृशी ब्राह्मणस्याथ कीदृशी क्षत्रियस्य वै ॥११

वैश्यस्य कीदृशी देव ! गतिः शूद्रस्य कीदृशी।
कथं गच्छेत पापेन ब्राह्मणस्तु यमालये ॥१२
क्षत्रियोवाथ शूद्रोवा वैश्यो वा गच्छते कथम्।
एतत्कथय देवेश ! लोकनाथ ! नमोऽस्तु ते ॥१३

वैशम्पायन उवाच।

स पृष्टः केशवश्चैव धर्मपुत्रेण धीमता।
उवाच संसारगतिं चतुर्वर्णस्य कर्मजाम् ॥१४

श्रीभगवानुवाच।

शृणु वर्णक्रमेणैव धर्मान् धर्मभृताम्वर !।
नास्ति किश्चिन्नरश्रेष्ठ ! ब्राह्मणस्य तु विक्रयः ॥१५
ये तु तासु सदा ध्यात्वा सन्ध्यां ये च उपासते।
यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुहते च ये ॥१६
वैश्वदेवाश्च ये कुर्युः पूजयन्त्यतिथींश्च ये।
नित्यस्वाध्यायशीलाश्च पश्चयज्ञपरायणाः ॥१७
सायं प्रातर्हुताशाश्च गुर्वभोजनवर्जिताः।
दम्भाचारविमुक्ताश्च स्वदारनिरताः सदा ॥१८
पश्चयज्ञरताश्चैव अग्निहोत्रमुपासते।
ते नमस्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते ॥१६
ब्रह्मलोके ततः कामं गन्धर्वैं र्ब्रह्मगायकैः।
उपगीयमानाः प्रिय ! तैः पूज्यमानाः स्वयम्भुवा ॥२०
ब्रह्मलोके प्रमोदन्ते यावद्भूतस्य विप्लवम्।
क्षत्रियोऽपि स्थितो राज्ये स्वधर्मं परिपालयन् ॥२१

सम्यक् प्रजाः पालयिता स्वधर्मनिरतः सदा ।
यज्ञदानरतो धीरः स्वधर्मनिरतः शुचिः ॥२२
शास्त्रानुकारी तत्त्वज्ञः प्रजाकार्यपरायणः ।
विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः ॥२३
सत्यसन्धः शुचिर्नित्यलोभदम्भविवर्जितः ।
क्षत्रिय उत्तमां याति गतिं देवनिषेविताम् ॥२४
तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च प्रयत्नतः ।
सेव्यमानो महातेजाः क्रियते शक्रपूजितः ॥२५
चतुर्युगानि वै त्रिंशत् मोदित्वा तत्र देववत् ।
इहैव मानुषे लोके चतुर्वेदी द्विजो भवेत् ॥२६
कृषिगोपालनिरतः स्वधर्मविक्षणेरतः ॥
वणिक् स्वकर्म वाप्नोति पूज्यमानोऽप्सरोगणैः ।
चतुर्युगानि वै त्रिंशत् ऋद्धिं द्वादश पञ्च च ॥२७
इह मानुष्यके राजन् ! राजा भवति वीर्यवान् ।
त्रयाणामपि वर्णानां शुश्रूषानिरतः सदा ॥२८
विशेषेण तु विप्राणां दासवद्यस्तु तिष्ठति ।
अयाचितप्रदाता च सत्यशौचसमन्वितः ॥२९
गुरुदेवेषु निरतः परदारविवर्जितः ।
परपीडामकृत्वैव भृत्यवर्गं बिभर्त्ति यः ।
मृतोऽपि स्वर्गमाप्नोति जीवाना मभयप्रदम् ॥३०
स स्वर्गलोके ऋधित्वा वर्षकोटीर्महातपाः ।
इह मानुष्यलोके वै वैश्यो धनपतिर्भवेत् ॥३१

एवं धर्मात्परं नास्ति महत् संसर्गसाक्षिणः ।
स स्वधर्मात्परं किञ्चित् पापकर्मव्यपोहनम् ।।३२
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ।।

युधिष्ठिर उवाच ।

भगवन् ! देव देवेश वदस्व मधुसूदन ! ।
शुभस्याप्यशुभस्यापि क्षयवृद्धीर्यथाक्रमम् ।।३३

श्रीभगवानुवाच ।

श्रृणु पाण्डव ! तत्सर्वं धर्मं सूक्ष्मं सनातनम् ।
दुर्विज्ञेयं प्रमोदन्ते यं ज्ञात्वा ते महाजनाः ।
यथैव शीतमुदकमुष्णेन बहुधा व्रतम् ।।३४
भवेत्तु तत्क्षणादुष्णं शीतत्वञ्च विनश्यति ।
यथोष्णं वा भवेदब्दं शीतेनापि यथाव्रतम् ।।३५
शीतत्वञ्च भवेत्सर्वं मुष्णत्वञ्च विनश्यति ।
एवन्तु यद्भवेत् भूमन् ! सुकृतं वाथ दुष्कृतम् ।।३६
तदल्पं क्षपयेद्धिप्रं नात्र कार्या विचारणा ।
समत्वे सति राजेन्द्र ! तयोः सुकृतपापयोः ।।३७
गृहीतस्य भवेद्वृद्धिः कीर्तिर्यस्य भवेत् स्वयम् ।
ख्यापनेन तु तापेन प्रायः पापं प्रणश्यति ।।३८
तथा कृतस्तु राजेन्द्र ! धर्मोनश्यति भारत ! ।
गृहीतौ ता वुभौ सम्यक् वृद्धियातौ न संशयः ।।३९

तस्मात्सर्वप्रयत्नेन न पापं ग्राहयेद्भयम्।
तस्मादेतत्प्रयत्नेन कीर्तितमक्षयं महत्।
तस्मात् सङ्कीर्तयेत्पापं नित्यधर्मञ्च ग्राहयेत्॥४०

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

### अथ दानप्रकरणवर्णनम्।

वैशम्पायन उवाच।

एवं श्रुत्वा वचस्तस्य धर्मपुत्रोऽच्युतस्य तु।
पप्रच्छ पुनरप्यन्यान् धर्मान् धर्मात्मजोहरिः॥१

युधिष्ठिर उवाच।

वृथा चरति जन्मानि वृथा दानानि वा कृतिः।
वृथा च जीवितं क्षेमो नराणां पुरुषोत्तम!॥२
कीदृशासु व्यवस्थासु दानं देयं जनार्दन!।
इह लोकेच भवति पुरुषः पुरुषोत्तम!॥३
गर्भस्थे कर्म चायाति किं बाल्ये चापि केशव!
यौवनत्वेऽपि किं कृष्ण! वृद्धत्वेचापि किं भवेत्॥४
सात्विकं कीदृशं दानं राजसं कीदृशं भवेत्।
तामसं कीदृशं देव! तमधीष्यति किं प्रभो!॥५

उत्तमं कीदृशं दानं मध्यमं कीदृशं भवेत् ।
अधमं कीदृशं दानं तेषां यादव ! किं फलम् ॥६

किं दानं नयतेर्बुद्धिर्गतिं किं मध्यमां नयेत् ।
गतिं जघन्या मथवा देवदेव ! प्रयान्ति मे ॥७

एतदिच्छामि विज्ञातुं परं कौतुहलं हि मे ।
त्वदीयं वचनं सत्यं पुण्यञ्च मधुसूदन ! ॥८

वैशम्पायन उवाच ।

एवं धर्मप्रसक्तेन पृष्टः पाण्डुसुतेन वै ।
उवाच वासुदेवोऽथ धर्मान् धर्मेण पाण्डवम् ॥६

श्रीभगवानुवाच ।

शृणु राजन्यथान्यायं वचनं तथ्यमुत्तमम् ।
कथ्यमानं सदा पुण्यं सर्वपापव्यपोहनम् ॥१०

वृथा च दश दानानि चत्वारि च नराधिप ! ।
वृथा दानानि पञ्चाशत् पञ्च चैव यथाक्रमम् ॥११

वृथा च जीवितं येषां ते च सर्पपकीर्तिताः ।
अनुक्रमेण सर्वाणि तानि वक्ष्यामि पाण्डव ! ॥१२

धर्मघ्नानां तथा चैव लुब्धानां पापिनां तथा ।
वृथापाकश्च यत्सन्ति परदाररताश्च ये ॥१३

पाकभेदकरा ये च यथा स्युः सत्यवर्जिताः ।
मिष्टमश्नाति यश्चैको दृश्यमानस्तु बान्धवैः ॥१४

पितरं मातरञ्चैव उपाध्यायं गुरुं तथा।
मातुलं मातुलानीञ्च योहि हन्याच्छपेत्तथा ॥१५

ब्राह्मणाश्चैव ये भूत्वा सन्ध्योपासनवर्जिताः।
निर्ब्रांह्मथो निःस्वधश्चैव यश्च गुर्वन्नभुक् द्विजः।
मम वा शङ्करस्यापि ब्रह्मणो वा युधिष्ठिर! ॥१६

पूर्वाह्नब्राह्मणानान्तु ये न भक्ता नराधिप!।
वृथा जन्मन्यथैतेषां पापानां विद्धि पाण्डव! ॥१७

अश्रद्धया च यद्दत्तं चौर्येणावर्जितन्तु यत्।
अभिशस्ताहृतं यत्तु यद्दानं पतिते द्विजे ॥१८

अब्रह्माभिहितं यत्तु यद्दत्तं सर्वयाचके।
प्राप्ते तु यद्धि तद्दान मारूढपतिते च यत् ॥१९

यत् ग्रामयाचकर्णान्तं यत्कृतघ्नहृतस्तथा।
उपपातकिने दत्तं वेदविक्रयिणे च यत् ॥२०

स्त्रीजीविते च यद्दत्तं यच्च देवलकाय च।
देवपूर्वाशिने दत्तं नित्यकर्म न कारिणे ॥२१

रङ्गोपजीवने दत्तं यच्च मांसापजीविने।
सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे ॥२२

अदेशिने च यद्दत्तं दत्तं वार्धुषिकाय च।
यदनाचारिणे दत्तं यच्च दत्तं वृथाशिने ॥२३

असभ्योपासिने दत्तं यच्च ग्रामनिवासिने।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत् ॥२४

नास्तिकाय च यद्दत्तं धर्मविक्रयिणे च यत्।
कारकाय च यद्दत्तं दत्तं यत् कूटसाक्षिणे ॥२५

नचात्मानं तरन्त्येते न दातारं युधिष्ठिर !।
यत्तेभ्यो दत्तमात्राणि दानानि सुबहून्यपि ॥२६

वृथा भवन्ति राजेन्द्र ! भस्मन्याज्याहुतिर्यथा।
यथेष्टं यत्फलं किञ्चित् भविष्यति कथञ्चन ॥२७

राक्षसाश्च पिशाचाश्च तद्विलुम्पन्ति संश्रिताः।
वृथा ह्येतानि दानानि कथितानि समासतः २८

जीवितञ्च वृथा तेषां तच्छृणुष्व युधिष्ठिर !।

श्रीभगवानुवाच।

ये च मां न प्रपद्यन्ते शङ्करं वा नराधमाः।
ब्रह्माणं वा महीदेवा वृथा जीवन्ति ते नराः ॥२६

ये च निन्दन्ति मां मूढाः शङ्करं वा नराधमाः।
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः ॥३०

विप्रा निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः।
विद्यमानधनोयस्तु दानधर्मविवर्जितः ॥३१

मृष्टमश्नाति यश्चैको वृथा जीवति सोऽपि च।
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ॥३२

तमोनिविष्टचित्तेन दत्तं दानञ्च यद्भवेत्।
न तस्य फलमश्नाति नरो गर्भगतो नृप !।
ईर्ष्यामात्सर्यसंयुक्तो भगवद्वाक्यकारणम्।
ददाति दानं यो मर्त्यो बालभावस्तदश्नुते ॥३३

श्रद्धायुक्तः शुचिः स्नातः प्रसन्नोभयमानसः।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते ॥३४
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते।
तत् सार्वकामिकं विद्धि दान मामरणान्तिकम् ॥३५
सात्विकं राजसञ्चैव तामसञ्च युधिष्ठिर !।
दानं दानफलञ्चैव गतिश्च त्रिविधां शृणु ॥३६
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै।
उपकारवियुक्ताय दत्तं यत्तद्धि सात्विकम् ॥३७
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव !।
दीयते यत्प्रणष्टाय तत् सात्विकमुदाहृतम् ॥३८
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे।
समृद्धाय च यद्दानं तद्राजसमुदाहृतम् ॥३९
सम्बन्धिने च यद्दानं व्रताय चैव पाण्डव !।
लाभादिभिरपात्राय तद्राजसमुदाहृतम् ॥४०
वैश्वदेवविहीनाय यद्दानं श्रोत्रियाय च।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥४१
सरोषमवधूतञ्च शोकयुक्तमवज्ञया।
सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम् ॥४२
देवाः पितृगणाश्चैव जनयश्चाग्नयस्तथा।
सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ! ॥४३
अथवा दैत्यसङ्घाश्च गृहयज्ञांश्च राक्षसाः।
राजसं दानमश्नन्ति वर्जितं पितृदैवतः।

पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिश्च त्रिविधां शृणु ॥४४

सात्विकानां तु दाना‍ना मुत्तमं फलमिष्यते ।
मध्यमं राजसानान्तु तामसानां तु पश्चिमम् ॥४५

अभिगत्योपनीतानां दानानामुत्तमं फलम् ।
मध्यमन्तु समाधाय जघन्याय च ते फलम् ॥४६

अयाचितप्रदाता वै स याति गतिमुत्तमाम् ।
समाहूय तु वै दद्यात् मध्यमां स गतिं व्रजेत् ॥४७

याचितो यस्तु वै दद्यात् जघन्यां स गतिं व्रजेत् ।
उत्तमा दैवकी ज्ञेया मध्यमा मानुषी गतिः ॥४८

जघन्या याति तिर्यक्षु गतिरेषा क्रियः मता ।
पत्रभूतेषु विप्रेषु स्थितेषु चाहिताग्निषु ॥४९

यश्च यच्छति तीव्रोष्णं क्षयकृत् स प्रकीर्त्यते ।
श्रोत्रियाणां दरिद्राणां भरणं कुरु पाण्डव ! ॥५०

समृद्धानां द्विजातीनां कार्य्यन्ते परिरक्षणम् ।
दरिद्रान् वृत्तिहीनानां प्रदानैस्तांस्तु पूजयेत् ॥५१

आतुरस्यौषधैः कार्य्यं नीरुजस्य किमौषधैः ।
पापं प्रतिगृहीतारं प्रदातु मुपगच्छति ।
प्रतिगृहीतुर्य्यत्पुण्यं प्रदातारमुपैति तत् ॥५१

तस्माद्दानं सदा कार्य्यं परमं हितमिच्छता ।
वेदविद्यावता तेषु सदा गुर्वन्तवर्जनम् ॥५२

प्रयत्नेन हि दातव्यो महादानमयो निधिः।
यस्तु दाता प्रयच्छेत सहस्रस्यावलम्बनम् ॥५३

भुक्तशेषस्य भक्तस्य तं निमन्त्रय भारत !।
अमन्त्रन्तु निराशास्ते न कर्तव्या हि पाण्डव ! ॥५४

कुलानि सन्ततिः प्राणा नैषामाशा हता भवेत्।
मद्भक्ता ये नरश्रेष्ठ ! मद्गता मत्परायणाः।
मद्याजिनो मन्नियमास्तान् प्रयत्नेन पूजयेत् ॥५५

तेषान्तु पावनायाहं नित्यमेव युधिष्ठिर !।
उभे सर्वे प्रतिष्ठामि व्यसनं तच्च सुव्रतम् ॥५६

तस्मादष्टाक्षरं मन्त्रं मद्भक्तै र्वीतकल्मषैः।
सन्ध्याकालेष्वकालेषु जप्तव्यश्चात्मशुद्धये ॥५७

अन्येषामपि विप्राणां किल्विषं हि प्रणश्यति।
उभे सर्वे च पुरुषा स्तस्माद्विप्रो विशुद्धये ॥५८

दैवे श्राद्धे च विप्रः सन् विधियुक्तो जुगुप्सितः।
जुगुप्सितन्तु तत् श्राद्धं दहत्यग्निरिवेन्धनम् ॥५६

भारतं मानवोधर्मः साङ्गवेदश्चिकित्सितम्।
अज्ञाविद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥६०

न ब्राह्मणान् परीक्षेत दैवे कर्मणि मन्त्रवित्।
महान् भवेत् परीवादो ब्राह्मणानां परीक्षणे ॥६१

ब्राह्मणानां परीवादं यः करोति नराधमः।
सहसैव शुनां योनिं स गच्छेत् ब्रह्मदूषकः ॥६२

स्वल्पपापेन निन्दित्वा परीवादात् खरो भवेत्।
परिभाय कृमिर्भवति कीटो भवति मस्करी ॥६३
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥६४
क्षत्रियञ्चैव स पञ्चब्राह्मणञ्च बहुश्रुतम्।
नावमन्येत मेधावी कृशानपि कदाचन ॥६५
इह तञ्चापि पुरुषं निर्दहेदवमानितम्।
तस्मादेतं प्रयत्नेन नावमन्येत बुद्धिमान् ॥६६
यथा सर्वास्ववस्थासु पावको दैवतं महत्।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत् ॥६७
व्यङ्गान् काणांश्च कुब्जांश्च वामनान् गास्तथैव च।
स निर्वदेद्युक्तश्च मिश्रिता वेदपारगैः ॥६८
मन्यून्नोत्पादयेत्तेषां नचानिष्टं समाचरेत्।
मन्युपहरणा विप्रा न विप्राः शस्त्रपाणयः ॥६९
मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्र इवासुरान्।
ब्राह्मणो हि महद्दैवं कथितं वेदपारगैः ॥७०
द्विजाश्च सर्वभूताना धर्मकोशस्य गुप्तये।
किं पुनस्ते च कौन्तेय ! स नित्यमुपासते ॥७१
यस्यास्येन सदाश्नन्ति हव्यानि विविधानि च।
तरामस्तान् द्विजान् वै किमभूतमधिकन्ततः ॥७२
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥७३

भुक्तेषु तेषु स्ववशे तस्य धर्मं ददाति च ।
अनृशंस्यात् ब्राह्मणस्य भुञ्जतेऽपीतरे जनाः ॥७४
तस्मात्ते नावमन्तव्या मद्भक्ताश्च द्विजाः सदा ।
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः ॥७५
कलावस्थान् द्विजान् सर्व्वान् प्रयत्नेन प्रपूजयेत् ।
स्वगृहे वा प्रवासे वा दिवा रात्रौ तथैव च ॥७६
वृद्धाश्च ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव ! ।
नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ॥७७
नास्ति विप्रात् परो बन्धु र्नास्ति विप्रात् परोनिधिः ।
नास्ति विप्रात् परं तीर्थं न पुण्यं ब्राह्मणात् परम् ॥७८
नास्ति विप्रात् परो धर्मो नास्ति विप्रात् परा गतिः ।
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ॥७६
त्रायते दानमप्येकं पात्रभूते कृते द्विजे ।
बाला हिताग्नयो ये च शान्ताः स्युर्वान्नवर्जिताः ॥८०
मामर्चयन्ति सद्भक्तास्तेभ्यो दत्तं महाफलम् ।
प्रदानैः पूजितो विप्रो वन्दितो वापि कृत्स्नशः ॥८१
संभावितो वा विप्रो वै मद्भक्तो दिवमुन्नयेत् ।
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषास्तुतम् ॥८२
तं श्रुत्वा वाथवा दृष्ट्वा नरैः पापात् प्रमुच्यते ।
मद्भक्ता मद्गतप्राणा मद्भक्त्या मत्परायणाः ॥८३
वीजयोनिविशुद्धा ये श्रोत्रियाः संयतेन्द्रियाः ।
श्रुत्वान्नविरला नित्यन्ते पुनन्तीह दर्शनात् ॥८४

स्वयं नीत्वा विशेषेण दानन्तेषां गृहेष्वथ।
निधापयेत्तु मद्भक्त्या तद्दानं कोटिसम्मितम् ॥८५

जाग्रतः स्वपतोवापि प्रभासे स्वगृहेऽथ वा।
हृदयानि प्रपश्यामि यस्य विप्रस्य भारत ! ॥८६

स पूजितो वास्पृष्टो वा पृष्टोवापि द्विजोत्तमः।
सम्भाषितो वा राजेन्द्र पुनातीह नरः सदा ॥८७

एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव !।
मद्भक्तेभ्यः प्रदत्तानि तानि स्वर्गप्रदानि वै ॥८८

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

### अथ विप्राणां गुणदोषवर्णनम्।

वैशम्पायन उवाच।

श्रुत्वैवं सात्विकं दानं राजसन्तामसन्तथा।
पृथक् पृथक् फलञ्चैव गतिञ्चैव पृथक् पृथक् ॥१

अवितृप्तः प्रसन्नात्मा पुण्यधर्मामृतं पुनः।
युधिष्ठिरो धर्मनित्यः केशवं पुनरब्रवीत् ॥२

युधिष्ठिर उवाच।

द्विजयोनिविशुद्धानां लक्षणानि वदस्व मे।
बीजदोषेण लोके च जायते च कथन्तराम् ॥३
आचारदोषं देवेश ! वक्तुमर्हस्यशेषतः।
ब्राह्मणानां विशेषश्च गुणदोषौ च केशव ! ॥४
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ॥
एतत्कथय देवेश ! त्वद्भक्तस्य नमोऽस्तुते ॥५

श्रीभगवानुवाच।

शृणु राजन्यथातत्वं बीजयोनिशुभाशुभम्।
येन तिष्ठतिं लोकोऽयं विनश्यति च पाण्डव ॥६
अवस्थितब्रह्मचर्योयं च विप्रो यथाविधि।
स द्विजानामविज्ञेय स्तस्य बीजं शुभम्भवेत् ॥७
कन्या चाक्षतयोनिः स्यात् कुलीना पितृमातृतः।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ॥८
सा प्रशस्ता वरारोहा शुद्धयोनिः प्रशस्यते।
कानीनश्च सहोढश्च ता वुभौ कुण्डगोलकौ ॥६
आरूढवनितो ज्ञातः पतितस्यापि यः सुतः।
षडेते विप्र चण्डाला निषिद्धाः श्वपचादपि ॥१०
यो यत्र तत्र वा रेतः सिक्त्वा गुर्वीषु वाचयेत्।
कामचारी स पापात्मा बीजं तस्याशुभम्भवेत् ॥११

अशुभं तद्भवेद्वीजं शुद्धां योनिन्नचार्हति।
दूषयत्येव तां वाणीं श्रृणुध्वं च हविर्यथा ॥१२
गुर्वीयोनौ पतत् वीजं हाहाशब्दो द्विजन्मनाम्।
कुर्यात् पुरीषगर्तेषु पतितासि मतिः कुतः ॥१३
मामधः पातयेदेव कामात्मा पापमोहितः।
अधोगतिं व्रजेत् क्षिप्र मिति शप्त्वा पतेत्तु यत् ॥१४
आत्मा हि शुक्रमुद्दिष्टं दैवतं परमं महत्।
तस्मात्सर्वप्रयत्नेन निरुध्यात् शुक्रमात्मनः ॥१५
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः।
पुण्यश्च मत्प्रियत्वञ्च हन्यते ब्रह्मचर्यया ॥१६
अविप्लुतब्रह्मचर्यैर्गृहस्थाश्रममाश्रितैः।
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले ॥१७
सायं प्रातस्तु ये सन्ध्यां सम्यक् नित्यमुपासते।
नावं वेदमधिकृत्य तारयन्ति तरन्ति च ॥१८
यो जपेत् पावनीं देवीं गायत्रीं वेदमातरम्।
न सीदेत् प्रत्यगृह्णीत पृथिवीश्च ससागराम् ॥१९
ये च स्युः संस्थिताः केचित् गृहे सूर्योदयादिव।
ते चास्य सौम्या जायन्ते शिवाशुभकरास्तथा ॥२०
यत्र यत्रास्थिताश्चैव दारुणाः पिशिताशनाः।
घोररूपा महाकाया वीजं न घोषयन्ति च ॥२१
पुनन्तीह पृथिव्यां हि चीर्णा स्तत्वव्रता नराः।
ये चीर्णा व्रतवेदा ये विकर्मपथमाश्रिताः ॥२२

ब्राह्मणा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ! ।
किं पुनर्यश्च सन्ध्ये द्वे नित्यमेवोपतिष्ठति ॥२३

शीलमध्ययनं दानं शौचमार्दवमार्जवम् ।
तस्माद्वेदान् विशिष्टान्वै मनुराह प्रजापतिः ॥२४

भूर्भुवः स्वरिति ब्रह्म यो वेद परमद्विजः ।
स्वदारनिरतो दान्तः स च विद्वान् स भूसुरः ।
सन्ध्यामुपासते विप्रा नित्यमेव द्विजोत्तमाः ॥२५

ते यान्ति नरशार्दूल ! ब्रह्मलोक मसंशयम् ।
सावित्रीमात्रसारोऽपि वरोऽपि प्रसुयन्त्रितः ॥२६

नायन्त्रित श्चतुर्वेदी सर्वाशी सर्वविक्रयी ।
सावित्रीञ्चैव वेदांश्च तुलया तुलयन् पुरा ॥२७

देवा ऋषिगणाश्चैव सर्वे ब्रह्मपुरःसराः ।
चतुर्णामपि वेदानां सा हि राजन् ! गरीयसी ॥२८

यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
समुत्सृज्य रसं सर्वं निरातङ्कमसारवत् ॥२९

एवं हि सर्ववेदानां सावित्री प्राणमुच्यते ।
निर्जपा हीतरे वेदा सावित्री मन्तरेण च ॥३०

एवं हि यश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः ।
शीलव्रतसमायुक्तः सावित्रीपाठको वरः ॥३१

सहस्रं परमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप कौन्तेय ! सर्वपापप्रणाशिनीम् ॥३२

युधिष्ठिर उवाच।

त्रिलोकनाथ ! भो कृष्ण ! सर्वभूतात्मको ह्यसि।
नानायोगपरश्रेष्ठ ! तुष्यसे केन कर्मणा ॥३३

श्रीभगवानुवाच।

यदि भारसहस्रन्तु गुग्गुल्यादि प्रधूपयेत्।
करोषि च नमस्कार मुपहारञ्च कारयेत् ॥३४
पूजयेत् स्तुतिभिर्माञ्च ऋग्यजुः सामतस्तथा।
न च तुष्यन्ति ते विप्रा नाहन्तुष्यामि भारत ! ॥३५
ब्राह्मणे पूजिते नित्यं पूजितोऽस्मि न संशयः।
आतुष्टेचाहमाकृष्योभवामि भरतर्षभ ! ॥३६
परमाधिगतिस्तेषां पूजयन्ति च मां हि ते।
यदहं द्विजरूपेण वसामि वसुधातले ॥३७
यस्तान् पूजयति प्राज्ञो मद्गतेनान्तरात्मना।
तमहंस्वेन रूपेण पश्यामि नरपुङ्गव ! ॥३८
काणाः कुब्जा वामनाश्च दरिद्रा व्याधितास्तथा।
नावमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः ॥३९
ये तेऽपि सागरान्तायां पृथिव्यां द्विजसत्तमाः।
मम रूपेषु तेष्वेव मर्चितेष्वर्चितो भवान् ॥४०
बहवस्तु न जानन्ति नरा ज्ञानबहिष्कृताः।
यथाहं द्विजरूपेण वसामि वसुधातले ॥४१
अवमन्यन्ति ये विप्रान्विकर्मापादयन्ति च।
प्रेषयन्ते च सततं सुभ्रूणाङ्कारयन्ति च ॥४२

भूतांस्तान् करपत्रेण यमदूता महाबलाः ।
निष्कृतन्ति यथाकाष्ठं सूत्रमार्गेण शिल्पिना ॥४३
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजादिषु ।
तान् दूता यमलोकस्थान् निपात्य धरणीतले ॥४४
आक्रुश्योरसि पादेन क्रुद्धासंरक्तलोचनाः ।
अग्निवर्णैस्तु सदृशैर्यमो हिंसन माचरेत् ॥४५
ये च विप्रा निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्यश्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ॥४६
तेषां घोरमहाकायं वज्रतुल्या महाबलाः ।
उद्धरन्ति मुहूर्तेन खगाश्चक्षुर्यमाज्ञया ॥४७
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम् ।
अस्थिभागञ्च यः कुर्यात् प्राणैर्वा विप्रयोजयेत् ॥४८
सोऽनुपूर्वेण यातीमान्नरकानेकविंशतिम् ।
शूलमारोपितो गत्वा ज्वलनेनापि दह्यते ॥४९
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्शिराः ।
नावमुच्येत दुर्मेधा न तस्य क्षीयते गतिः ॥५०
ब्राह्मणानविचार्यैव जयन्वै धर्मकाङ्क्षया ।
शतवर्षसहस्राणि तामिस्रोपरि पच्यते ॥५१
उत्पाद्य शोणितं गात्रात् संरम्भा इति पूर्वकम् ।
स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥५२
तस्मान्नाकुशलं ब्रूयात् न शुष्काङ्गिरमीरयेत् ।
तच्छ्रुत्वापरुषां वाणीं चैवैतानप्यतिक्रमेत् ।
ये विप्रं स्निग्धया वाचा पूजयन्ति नरोत्तमाः ॥५३

तच्छ्रुत्वा वै स्तुतश्चैव भवामि च युधिष्ठिर ! ।।५४
सज्जयन्ति च ये विप्रान् क्रोधयन्ति च भारत ! ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः ।।५५
यश्चन्दनैश्चागुरुधूपदीपैरभ्यर्च्य यत्काष्ठमधूम मर्च्यात् ।
तेनार्चितो नैव भवामि सद्यो विप्रार्चनादर्चितोऽहं भवामि ५६
विप्रप्रसादाद्धरणीधरोऽहं विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं विप्रप्रसादादजितोऽहमस्मि ।।५७

इति गौतमीये श्रीवैष्णवधर्मशास्त्रे चतुर्थोऽध्यायः।

.........

## पञ्चमोऽध्यायः।

### अथ जीवस्य शुभाशुभकर्मणां फलवर्णनम् ।

युधिष्ठिर उवाच ।

देव ! देवेश ! दत्यघ्न ! परं कौतुहलं हि मे ।
एतत्कथय सर्वज्ञ ! त्वद्भक्तस्य ममाच्युत ! ।।१
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरे ।
कीदृशं किं प्रमाणं वा किमधिष्ठानमेव च ।।२
तरन्ते मानवाः देवाः केनोपायेन मानवाः ।
क वास्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ।।३
कथयस्व महादेव ! सुखदुःख मशेषतः ।
जीवस्य यमलोके तु कर्मभिश्च शुभाशुभैः ।।४

अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः ।
मृत्युदूतैर्दुराधर्षैश्चौरैर्घोरपराक्रमैः ॥५

बद्धस्य क्षिप्यमाणस्य जनस्य च यमाज्ञया ।
पुण्यं पापं कथन्तिष्ठेत् सुखदुःखमशेषतः ॥६

दुराधर्षैर्ह्रीयते वा मानुषैस्तैः कथं पुनः ।
किं वा तत्र महादेवाः कर्म कुर्वन्ति मानवाः ॥७

कथं धर्मरता यान्ति देवता द्विजपूजकाः ।
कथं वा प्रेतकर्माणो धर्मं प्रेतपुरं नराः ॥८

किं रूपं किं प्रदानं वा वर्णः को वास्य केशव ! ।
जीवस्य क्रोशतो नित्यं यमलोकं ब्रवीषि मे ॥६

श्रीभगवानुवाच ।

शृणु राजन्यथातत्त्वं यमात्थ [यच्चपृच्छसि] यत्प्रयच्छसि ।
तत्राहं कथयिष्यामि मद्भक्तस्य नरेश्वर ! ॥१०

षडशीतिसहस्राणि योजनानां शतानि च ।
मानुषस्य च लोकस्य यमलोकस्य चान्तरम् ॥११

न तत्र वृक्षच्छाया च न तटाकं सरोहि वा ।
न वाप्यो दीर्घिका वापि न कूपं वा युधिष्ठिर ! ॥१२

न मण्डपं सभा वाऽपि न प्रभा न निवेशनम् ।
न पर्वतो नदी वाऽपि न भूमेर्विवरं क्वचित् ॥१३

न ग्रामो नाश्रमोवाऽपि नोद्यानं काननानि च ।
न किञ्चिद्विश्रमस्थानं पथि तस्मिन्युधिष्ठिर ! ॥१४

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
धनधान्येन वैश्यानां शूद्राणामग्रजन्मतः ॥३५६॥
यश्चाभिवादनो (दिनं) विप्र आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षो आशिषं न प्रयोजति ॥३६०॥
उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीं ।
पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ॥३६१॥
सोपानत्कं कृतघ्नं च मंत्रोच्चारकृतं रिपुम् ।
भुंजानमशुचिमंतं धावन्तं नास्तिकं तथा ॥३६२॥
वमंतं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥३६३॥
जपयज्ञजलस्थं च समित्पुष्पकुशान्तिलान् ।
उदपात्रार्थभैक्ष्यं च वहंतं नाभिवादयेत् ॥३६४॥
स्वयमेव विधानेन अभिवंदेभिवादकम् ।
संध्याये(?) नियमानेति द्रष्टव्या अभिवादने ॥३६५॥
देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् ।
नमस्कारं न कुर्वीत प्रायश्चित्ती भवेन्नरः ॥६६॥
जन्मप्रभृति यत्किंचित्सुकृतं समुपार्जितम् ।
तत्सर्वं निष्फलं याति एक हस्ताभिवादनात् ॥३६७॥
अग्निहोत्रफलावेदा षडंगसपदक्रमः ।
अग्निहोत्रात्परो धर्मो न भूतो न भविष्यति ॥३६८॥
न व्याहृतिसमो होमो न गायत्री समो जपः ।
नाग्निहोत्रात्परो यज्ञो न देवः केशवात्परः ॥३६९॥

अनलादर्शनं यावत् इतिवाजसनेयिनः ।
परान्नपक्वं नाश्नीयात् ह्यवसन् पर्वणि द्विजः ॥३७०॥
असन्तुष्टे सुखं नास्ति न धर्मः क्षुद्रमानसे ।
भाग्यहीने धनं नास्ति नास्ति पुण्येऽच्युतार्चनम् ॥३७१॥
सत्यानृताभ्यां जीवंतमृतेन प्रनृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्या कदाचन ॥३७२॥
सत्यानृतं तु वाणिज्यं श्ववृत्तिः नीचसेवनम् ।
सेवावृत्तिभि(स्तु)र्यैरुक्ता नूनं ते नैव पंडिताः ॥३७३॥
दक्षिणास्योऽपसव्येन तर्पयेत् विधिवत्पितॄन् ।
बाहूपूर्णतलैः कृत्वा जलस्थस्तर्पयेत् पितॄन् ॥३७४॥
स्थलस्थेन तु कर्तव्यं पितॄणां तृप्तिमिच्छता ।
विनारौप्य सुवर्णेन विना ताम्रतिलैर्न च ॥३७५॥
विना दर्भैश्च मंत्रैश्च पितॄणां नोपतिष्ठति ।
विवाहस्त्वेकजन्यानां एकस्मिन्नुदये कुले ॥३७६॥
नाशंकरोत्येकवर्षे स्यादेका विधवातयोः ।
प्रत्युद्वाहो नैव कार्यो नैकस्मिन् दुहितृद्वयम् ॥३७७॥
नैकजनन्योः पुंसो रेक (?) जनन्यके ।
मातामंगलसूत्रेण मृतायदि चतुर्दिने ॥३७८॥
उद्दिश्यविप्रपंक्तौ तां भोजयेत्तु सुवासिनीम् ।
जानुदघ्नजलस्थोवाऽऽविलं स्नानशाकटः ॥३७९॥
सव्येनप्राङ्मुखोदेवान् निवीत्युत्तरतोनरान् ।
शिशोर्मातारिगर्भिण्यां चूडाकर्म न कारयेत् ॥३८०॥

गते तु पञ्चमेवर्षे गर्भिणी यदि वा भवेत् ।
गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ॥३८१॥

पञ्चाब्दात्प्रागथोर्द्ध्वं च गर्भिण्यामपि कारयेत् ।
चूड़ाकर्म शिशोर्माता गर्भिणी यदि वा भवेत् ॥३८२॥

गर्भस्यैव विपत्तिः स्यात् दंपत्योर्वा शिशोरपि ।
सहोपनीत्या कुर्याच्चेत्तदादोषो न विद्यते ॥३८३॥

वेदान्तरमधीत्यैव ऋग्वेदं येत्वधीयते ।
उपनीतिरयं तेषामलंकरणवर्जिता ॥३८४॥

पाखंड्यस्पृश्यसंस्पर्शे न स्नायादुष्णवारिणा ।
नद्यां तु विद्यमानायां न स्नायादन्यवारिषु ॥३८५॥

अस्नातमातुरस्नाने स तीर्थं तु श्रृतोदकम् ।
स्नात्वा तु वाससी धौते अक्लिन्ने परिधाय च ॥३८६॥

प्रक्षाल्योरुमृताचाद्भिर्हस्तौ प्रक्षालयेत्ततः ।
काषायं कृष्णवस्त्रं च मलिनं केशदूषितम् ॥३८७॥

जीण नीलं संधितं च पारक्यं मैथुने धृतम् ।
अच्छिन्नाग्रमुपवस्त्रं कुत्सितं धमतो विदुः ॥३८८॥

यज्ञं दानं जपो होमं स्वाध्यायं पितृतपणम् ।
नैकवस्त्रो द्विजः कुर्याद्भोजनं तु सुरार्चनम् ॥३८९॥

तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ।
ततः सन्ध्यामुपासीत शुद्धचित्तोजितेन्द्रियः) ॥
मुहूर्तादग्निहोत्राणि नयंति परमां गतिम् ॥३९०॥

अत्रस्वर्गश्चमोक्षश्च यो यथा गन्तुमिच्छति ।
यदिच्छसि महासिद्धिं तीर्थराजाभिषेचनम् ॥३६१॥
विप्रपादविनिर्मुक्तं तोयं शिरसि धारय ।
दक्षिणां स ब्रह्मसूत्रं स्तेयेमे दक्षिणामुखः ॥३६२॥
कुशास्तान् द्विगुणी कुर्वन् जानुसव्यं निधाय च
मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ॥३६३॥
करोति यदि मूढात्मा तत्सर्वं निष्फलं भवेत् ॥३६४॥
विद्वान् स्वयं तु यो ब्रूयात् स धर्मः परमः स्मृतः ।
अच्छिद्रमितितद्वाक्यं वदंति क्षितिदेवताः ॥३६५॥
प्रणम्यशिरसाग्राह्यमग्निष्टोमफलैः सह ।
व्याघ्रपादेन चाख्यातं धर्मशास्त्रोत्तमोत्तमम् ॥३६६॥

इति व्याघ्रपादप्रणीतं धर्मशास्त्रं समाप्तम् ।

॥ समाप्तश्चायं स्मृतिसन्दर्भस्य चतुर्थोभागः ॥

* ॐ तत्सद्ब्रह्मार्पणमस्तु *

---